पत्यैरिव यौवनजनितैर्नानाभिलाषिभिरसलङ्कल्पै र्व्याकुली-क्रियमाणस्य कुमारमिव वरमार्गणयोग्यामतिमहती मवस्थां वा पश्यत स्वगृहे बन्धुभिरिव दुःस्थितैः समग्रैर्गृहैर्वा गृह्यमाणस्याभियोगपुरातनैरतिदुस्यजैर्मृभिरिव मलिनैः कर्मभिर्वानुवर्त्तमानस्य सकलशरीरसन्तापकरं करीषमिव दुष्कृतिना कृतचित्तस्य प्रविष्टुं राजकुलमुपहसतः कलेन्द्रियशक्तैरिव मिथ्यैव हृदयगतविश्वग्रामग्रहणाभिलाषस्य प्रथममेव तोरणतले चन्दनमालाङ्कितलयस्यैव शुष्यतोद्वाररक्षिभिः निरुद्धस्य निपीडितस्यापि प्रविशतोद्वारे हरिणस्येवापरैर्हन्यमानस्य च कर्म चर्मपुटस्येव मुहुर्मुहुः प्रतिहारमण्डलप्रहारैर्निरस्य निधि-पादपप्ररोहस्येव द्रविणाभिलाषादधोमुखीभवतोऽप्यमार्गणस्याप्यतिविकृष्टविधृतविसर्जितस्योद्वेगं व्रजतः कण्टकस्यापि च रणलग्नस्याकृष्यति चपीयाच्चिप्यमाणस्य मकरकेतोरिवाकालोपसर्पणकुपितेश्वरदृष्टिदग्धस्य प्रलयमुपगच्छतोरनेकपैरिव-कोपनभर्त्सितस्याभिन्नमुखरागस्य ब्रह्मघन इव प्रतिदिन-सम्बन्दनोद्घृष्टशिरःकपालस्य स्पर्शनरहितस्याशुभकर्माणि निर्वहतस्त्रिशङ्कोरिवोभयलोकभ्रष्टस्य नक्तंदिवमवाक्शिरसो-वाजिन इव कावनवशेन सुखवाह्यमात्मानं विदधानस्यानशन-शायिन इव हृदयस्यापितजीवनाशस्य शरीरं चपयतः शुन इव निजदारपराङ्मुखस्य जघन्यकर्मलग्नस्यात्मानमुन्नान-यतः प्रेतस्येवानुचितदीयमानान्नपिण्डस्य बलिभुक् जन्मइव जिह्वालौल्योपयुक्तपुरुषवर्चसोवृथाविहिता विहितायुषो जीवितश्मशानपादपानिव पिशाचस्य दग्धभूम्या पत्रषीकृतान् राजवल्लभानुपसर्पतो विपरीतजिह्वाजनितमाधुर्यै रोष्ठमान-

प्रकटितरागैः राजशुकालापैः शिशोरिव मुग्धस्य विलोभ्यमान-
वेतालस्येव नरेन्द्रप्रभावविशिष्टस्य न किञ्चिन्नाचरतश्चित्रधनुष
इवालीकगुणाध्यारोपणक्रियानित्यनम्रस्यालेख्यप्रदीपस्येव नि-
र्वाणतेजसो बककूटस्येव निर्माल्यग्राहिनः कफविकारिण
इव दिने दिने कटुकैरुद्वेज्यमानस्य सौगतस्येवार्थशून्य-
विज्ञप्तिजनितवैराग्यस्य काषायाण्यभिलषतः क्षपणकस्येवानेक-
कान्तार्थाधिगमाकुलधियः हृदयोपचितमलीकनिशास्वपि मालि
बलिपिण्डस्येव दिक्षु विक्षिप्यमाणस्याशौचगतस्येव कुशयन-
जनितसमधिकारदुःखवृत्तेस्तुलायन्त्रस्येव पश्चात्कृतगौरवस्य
तोयार्थमपि नमतोऽतिकृपणस्य शिरसा केवलेनासन्तुष्टवचसापि
पादौ स्पृशतोनिर्दयवेत्रिवेत्रताडनत्रस्तयेवापत्रपया त्यक्तस्य दै-
न्यसङ्कोचितहृदयहृतावकाशयेवाहोपुरुषिकया परिवर्जितकु-
त्सितकर्माङ्गीकरणकुपितयेव चोन्नमत्या विमुक्तस्य धनश्रद्धया
क्लेशानुपार्जयतः स्वदुष्टबुद्ध्यावमानं सम्बर्धयतो मूढस्य सत्यपि
विविधकुसुमाधिवाससुरभिणि वने मृगतृष्णायां तृष्णयाञ्ज-
लिमुपरचयतः कुलपुत्रस्यापि कृतागसइव भीतभीतस्य समी-
पं उपसर्पतो दर्शनीयस्यापि आलेख्यकुसुमस्येव निष्फलजन्मनो
विदुषोऽपि वैधेयस्येवापशब्दमुखस्य शक्तिमतोऽपि खिन्निण
एव सङ्कोचितकरयुगलस्यात्मात्समुत्कर्षेषु निरग्निपच्यमानस्य
नीचसमीरणेषु सोच्छ्वासं म्रियमाणस्य परिभववचनैस्तृणी-
कृतस्य दुःखानलेन तेजोज्वलतोऽतो भक्तस्याप्यभक्तस्य निरू-
ष्मणोऽपि सन्तापयतोबन्धून् विमानस्याप्यगतिकस्य च्युतगौर-
वस्याप्यधस्तादू गच्छतो निःसत्वस्यापि महामांसविक्रयं कु-
र्वतो निर्मदस्याप्यस्वतन्त्रवृत्तेर्योगिनोऽपि ध्यानवशीकृतात्मनः

शौर्य्यार्थं प्रणमतो दग्धमुखस्य गोत्रविदूषकस्य मनस्वि-जनं त्रासयतः कुलाङ्गारस्य वंशं दहतो नृपशोषणोऽपि लब्धैः कन्धरामवनमयतो जठरपरिपूरणमात्रप्रयोजनजन्मनो मांस-पिण्डस्य गर्भरोगस्य मातुः पुण्यानां कर्मणां मरणात् हृत-कस्य पातकिनः किं प्रायश्चित्तं क्व प्रतिक्रिया क्व तस्य शान्तिः कीदृशं सुखं कः पुरुषाभिमानः किन्नामानो विलासाः कीदृशी भोगश्रद्धा प्रबलपङ्कइव सर्वमधस्तान्नयति दारुणोदास शब्दः धिक् उच्छ्वसितं उपधातुं निधानन्तादृन अभवन्निर्भूतिरस्तु तस्याः नमो भगवद्भ्यस्तेभ्यः सुखेभ्यः तस्यायमञ्जलिरैश्वर्यस्य ति-ष्ठतु दूरतएव सा श्रीः शिवं स परिच्छदः करोतु यदर्थमुत्तमाङ्ग मागमिष्यति अशापानुग्रहक्षमस्तपस्वी असुखप्रियतरः क्लीबः अपूतिमानवस्कारक्रिमिः अगण्यमानोनरकः पादधूलिधूसरितो-त्तमाङ्गोजङ्गमः पादपीठः पुंस्कोकिलः काकुभणितेषु स्थल-कमठः क्रीडाकर्षणेषु स्थानीचाचाणेषु कृकलासः शिरो-विडम्बनासु जाहकः आत्मसङ्कोचनेषु प्रतिपादुकः पादसंवा-हनेषु कन्तुकः करतलताडनेषु वीणादण्डः कोणाभिघातेषु वेणुमूर्च्छनासु वेश्याकायः करणबन्धनक्लेशेषु यत्नालराशिः सत्व-शालिषु वराकः सेवकोऽपि मर्त्यमध्येराजिलोऽपि भोगिपुलाको-ऽपि कलमः वरं तृणमपि क्षतामानवतामानरतां नमतो नमत स्त्रैलोक्याधिराज्योपभोगोऽपि मनस्विनः तदेवमभिनन्दितास्तत् प्रणयोर्देवीदिवसैः कतिपयैरेव परागतः प्राग्ज्योतिषेश्वरइति करोतु चेतसीत्युक्त्वात्तूष्णीमभूत् चिराच्च नमस्कृत्य निर्जगाम राजापि रजनीन्तां कुमारदर्शनौत्सुक्य स्वीकृतहृदयोऽनैषीत् आत्मार्पणं हि महतां मूलमन्त्रमयं वशीकरणं प्रभाते च प्रभूतं

प्रतिप्राभृतं प्रधानप्रतिभूतावेष्टितं दत्त्वा हंसवेगं प्राहिणोत्। आत्मनापि ततः प्रभृति प्रयाणकैरनवरतैरभ्यमित्रं प्रावर्तत। कदाचिच्च राज्यवर्द्धनभुजबलार्जितमशेषं मालवराजसाधनमादायागत समीप एवासीनं लेखाहारिकात् भण्डिमशृणोत्। श्रुत्वा चाभिनवभूतभ्रातृशोककृतावसरसहदर्शनकातरे हृदये बभूव मूर्च्छा अन्धकार मिव विवेश अतिष्ठच्च समुत्सृष्टसकलव्यापारः प्रतिहारनिवारणनिःशब्दपरिजने निजमन्दिरे सराजपरिवारः तदा गमन मुदीक्षमाणो मुहूर्तम्।

अथ भण्डिरेकेनैव वाजिना कतिपयकुलपुत्रपरिवृतः परिमलिनवासाः रिपुशरशल्यपूरितेन निखातवज्रलोहकीलपरिकरपरिरक्षितस्फुटनेनेव हृदयेन हृदयलग्नैः स्वामिसुकृतैरिव प्रसृमरैः धृति मुत्पादयन् दूरितव्यायामपरिशिथिलभुजं दोलायमानमङ्गलवलयैकशेषालङ्कृतिरनादरोपयुक्तताम्बूलविकलरागेण शोकदहनदह्यमानस्य हृदयस्याङ्गारेणेव दीर्घनिश्वासवेगनिर्गतेनाधरेण शुष्यता स्वामिविरहविधुतजीवितापराधवैलक्ष्यादिव बाष्पवारिपटलेन प्रावृतवदनो बिभ्रन्निव दुर्बलीभूतैः स्वाङ्गैरिवापत्रपयाङ्गैर्वहन्निव प्रत्यक्षीभूतं महोत्साणमायतैः श्वसितैः पातकीवापराधीव दोषीव मुषित इव यूथपतिपतनविषण्ण इव वेतण्ड इव सूर्यास्तमयनिःश्रीक इव कमलाकरः दुर्योधननिधनदुर्मना इव द्रौणिरपहृतरत्नसार इव सागरो राजद्वार माजगाम।

अवतीर्य च तुरङ्गमादवनतमुखो विवेश राजमन्दिरं दूरादेव विमुक्ताक्रन्दस्यपात पादयोः अवनिपतिस्तु तमुत्थाय प्रविरलैः

पादैः प्रत्युद्गम्योत्थाप्य कण्ठे गाढमुपगृह्य करुणमतिचिरं-करोद्। शिथिलीभूतमन्युवेगश्च पुरेव पुनरागतनिजासने निषसाद। प्रथमप्रक्षालितमुखे भण्डिर्मुख मक्षालयत् अति क्रान्ते कियत्यपि च कालशकले भ्रातृदारुणवृत्तान्तं अप्राक्षीत् अकथयच्च यथावृत्तान्तमखिलं भण्डिः।

अथ नरपतिस्तमुवाच राज्यश्रीवृत्तान्तः क इति स पुनरवादीत् देव! देवभूयं गते राज्यवर्धने गौडैः गृहीता च कुशस्थले देवी राज्यश्रीः परिभ्रष्टा बन्धनाद्विन्ध्याटवीं सपरिजना प्रविष्टेति लोकतोवार्तां अशृणुवं। अन्वेष्टारस्तु तां प्रति प्रभूताः प्रहिता नाद्यापि निवर्तन्त इति तच्चाकर्ण्य नरपतिरब्रवीत्किम परैरनुपदिभिर्यत्र सा परित्यक्तान्यकृत्य स्वयमेवाहं यास्यामीति भवानपि कटकमादाय प्रसादेन प्रवर्तन्तां गौडाभिमुखं इत्युक्त्वा चोत्थाय स्नानभूमिमगात्। कारितशोकश्मश्रुवपनकर्मणा च महाप्रतीहारभवनं स्नातेन शारीरकवसनकुसुमाङ्गरागालङ्कारप्रेषणप्रकटितप्रसादेन भण्डिना सार्द्धं भुक्त्वा निनाय च तेनैव सह वासरम्।

अथापरेद्युरुषस्येव भण्डिर्भूपाल मनुसृत्य व्यज्ञापयत् पश्यतु देव! श्रीराज्यवर्धनभुजबलार्जितं साधनं सपरिबर्हं मालवराजस्येति नरपतिना चैव भवत्वित्यभ्यनुज्ञातोदर्शयांबभूव। तद्यथा अनवरतगलितमदमदिरामोदमुखरमधुकरजटिलकरटपट्टपङ्किलगन्धान् गण्डशैलानिव जङ्गमान् गम्भीरगर्जितरवान् जलधरानिव महीमवतीर्णानुत्फुल्लसप्तच्छदामोदमुदः शारदानिव दिवसान् पुञ्जीभूतानेकसहस्ररुञ्जान्

करिणश्चामीकरचितचामरमण्डनमनोहरांश्च हरिणरंहसो-हरीन् बालातपविवरवर्षिणश्च करेणैवेन्द्रायुधीकृतदश-दिशामलङ्काराणां विशेषान्विस्मयकृतस्मरोन्मादिमालवीकुच-मिलनदुर्ललितांश्च निजज्योत्स्नाकृतनीहाराहारानुडुपतिसञ्च-यान् निजयशांसीव बालव्यजनानि जातरूपनालञ्च निवासञ्च पुण्डरीकमिव श्रियः श्वेतमातपमप्सरस इव बहुसमररसानु-रागावतीर्णा वारविलासिनी सहासनस्य धनादिप्रभृतीनिव राज्योपकरणानि कालायसनिगडनिश्चलीकृतचरणयुगलञ्च सकलं मालवराजलोकमशेषांश्च संख्यालेख्यपत्रकान् सालङ्कार-पेटापीडान् कोशकलशानथावलोक्य तत्सर्वमवनिपालः स्वीकर्त्तुं यथाधिकार मादिशदध्यक्षान्।

अन्यस्मिंश्चाहनि स्वयं स्वसार मन्वेष्टुं समुच्चचाल विन्ध्याटवीं। अवाप च परिमितैरेव प्रयाणकैस्तामथ प्रविशन् दूरादेव दह्यमानषाष्टिकबुसविसरविसारिणां विभावसूनां वन्यधान्यबीजधान्यदाहिनां धूमेन धूसरितमादधानैः शुष्क-शाखासञ्चयनिचितगोपाङ्कवेष्टितनिकटनिबिडवटैर्वापदि व-त्सर इव रोषाविष्टगोपकल्पितस्य प्रयत्नैरयन्त्रितवनपालाहङ्-क्रियमाणग्रामीणकाककुठारै र्गहनतरुखण्डनिर्मितचामुण्डा-मण्डपैर्वनप्रदेशैः प्रकाश्यमानमटवीं प्रायतयाकुटुम्बभरणा-कुलैः कुद्दालप्रायकृष्टिभिः कृषीवलैरवखनद्भिरल्पभागभाषि-तेन भज्यमानभूरिखिलक्षेत्रमण्डल मल्पावशेषकालशिलैश्च कालायसैरिव कृष्णमृत्तिकाकठिनैः स्थानस्थानस्थितस्थूल-पल्लवैर्दुरुपगं श्यामाकप्ररूढिभिरलम्बुसाबहुलैरविरहितैः को-

किलाटैः तुषैर्विरलविरलैः केदारैः कृच्छ्रात्कृष्यमाणैर्नातिदूरवर्तिभिः प्रभूतप्ररूढभुवसुपलोलसुपरचितैरुच्चैर्मञ्चैः सूच्यमानश्वापदोपद्रवं दिशि प्रतिमार्गद्रुमदन्तानां पथिकपटप्रस्फोटनधूलीधूसरैर्वनपल्लवैर्लाञ्छितच्छायानां अटवीसुलभकुसुमार्चितनवखातकपीतकोपिकण्ठप्रतिष्ठापितनगघटानां च्छिद्रकटकल्पितकुटीरकाणां कुटिलकीटवेणीवेष्ट्यमानसक्तुशरावश्रेणीनां मण्डलगगजजम्धजम्बूफलास्थिशबलभुवां उद्धूतधूलीकदम्बकस्तबकप्रकरपुलकितानां कर्करीषचक्राक्रान्तकाष्ठकञ्चिकासुपिततृषां नव्यतलशीतलसिकतिलकलशीशमितश्रमणानामनाम्लानशैवलश्यामलितं झिञ्झरायमानशोषसरःशिशुसहकारफलजूटजटिलकूलानां विश्राम्य अकर्पटिकपेटकपरिपाटीपीयमानपयसामटवीप्रदेशप्रपाणां शैत्येन त्यजन्तमिव ग्रैष्ममूष्माणमर्चद्रवीत्थयं ग्राहयन्तमिवागरीयोदारुसंग्रहदाहिभिर्ज्योत्स्नाकरैः सर्वतश्च प्रातिवेश्यविषयवासिनामानन्दमासन्नग्रामगृहस्थस्थविरपाल्यमानस्थगितेन कृतदारुदारणव्यायामयोग्याभ्यङ्गेन स्कन्धाध्यासितकठोरकुठारकण्ठलम्बमानप्रतारागपुटेन पाटच्चरं प्रत्युवाच प्रत्यतिपन्नपटच्चरेण कालवेत्रलिगुणव्रततीवलयपाशग्रथितपत्रवीटिकाविहितमुखैर्घटितघटैरूढवारिणा पुरःसरबलिवलीवर्दधुगरथेन नैकटिककुटुम्बलोकेन काष्ठसंग्रहार्थमटवीं प्रविशता श्वापदपथव्यवधानधवलसमारोपितकुटीरकृतकूटपाशैश्च गृहीतमृगग्रहणतन्तुतन्त्रीजालावलयवागुरैर्वङ्कभिर्व्याधैर्विचरद्भिरंसावसक्तवीतंसव्यावलम्बमानपाशपाशकैश्च सङ्गृहीतग्रा-

हस्तक्रकरकपिलादिपञ्जरैः शाकुनिकैः सञ्चरद्भिस्तूतशकले विलिप्तलताग्नलम्पटानाञ्च पेटकैः पाशिकशिशुनासटङ्कि-सूणस्तम्भान्तरिततित्तिरीतरलायमानकौलेयककुलानां चातकैश्च मृगद्वयग्याद्रगयुयुत्रभिः क्रीड़द्भिः परिपातचक्रवाककण्ठ-कषायत्वचाञ्च शीतशुष्यानां वल्कलानां कलापान् नातिचिरो-द्धृतानाञ्च धातुत्विषां धातकीकुसुमानां मणिता गोणीः पीत-व्यानाञ्चातसीशणपट्टपूलकानां पुष्कलानां सम्भारांश्च मधुनो-माक्षिकस्य मायूराङ्गस्य शिष्टमधूच्छिष्टचक्रिकामालानाञ्च लम्बमानलामज्जकपुञ्जजटालानां पक्वत्वचाञ्च दिरकाष्ठाना कुष्ठस्य च कठोरकेसरिसठाभारबभ्रूणाञ्च भूयसो भारकान् लोध्रस्य लोकेनादाय व्रजता प्रविशता विविधवनफलपूरित-विकटमस्तकाभिररण्यग्रामगह्वरीभिः सत्वरमाणाभिर्विक्रय-चिन्ताव्यग्रग्रामटिकाभिर्व्याप्तदिगन्तरमितस्ततश्च युक्तमूकशा-कराणां पुराणपांसूत्करकरीषकूटवाहिनीनां धूर्गतधूली-धूसरसारथिसैरिकसरोषस्वरसार्यमाणानां क्रीड़च्चटुल-चक्रचीत्कारिणीनाञ्च शकटश्रेणीनां सम्पातैः सम्पाद्यमानदु-र्बलोर्बीचेतसंस्कारं अरचितकच्छिप्तदण्डतासोऽर्पितमान हरि-णहेलाविलम्बितवैणवप्रभृतिभिश्च निखातगोकरङ्गशङ्कु शङ्कि-तशशकशकलितशृङ्गशृङ्गैः पृथक्पतितविशङ्कटविटपैर्वाटैरै-श्चवैः सुवङ्कश्यामायमानोपकण्ठ मतिविकटप्रकष्टान्तरैश्च मरकतस्निग्धस्नुहिवाटवेष्टितैः कामदुष्कमंशवंशविटपसङ्कटैः कण्टकिकरञ्जिराजिदुष्प्रवेशैरूपगमकूपकवाचावङ्कवशकसर-स्तूरणशिग्रुग्रन्थिपर्णागवीथिकागर्भगुल्मगगनैर्गण्डवाटकैः निवा-

तोच्चकाष्ठारोपिता काष्ठालुकलताप्रतानप्रच्छादितच्छाद्यैः परिमण्डलबदरीमण्डपतलनिखातखादिरकीलबद्धवत्सरूपैः कथमपि कुक्कुटरटितानुनीयमानसंनिवेशैरङ्काहसितस्तम्बविरचितप्रविकावापिकैः प्रकीर्णबदरपटलपाटलैः वेणुकच्चरपुटककमलितनलकप्रमयमयं विहितभित्तिभिः किंशुकरोचनारचितमण्डनैर्बल्लजवध्याहारराशिभिः शाल्मलीतूलसञ्चयबहुलैः सन्निहितनलशालीशालूककुमुदबीजवेणुतण्डुलैः संगृहीतसारबीजैर्भस्ममलमलिनकाश्मर्यबीजकूटव्याहतप्रतकटैराख्यानराजादनमदनफलस्थितैर्मधूकासवमद्यप्रायैः कुसुम्भकगर्भकुम्भकुशूलैरविरहितराजमाषत्रपुसकर्कटीकूष्माण्डालाबुबीजैः प्रोष्यमाणबिडालमालूरवनकूकुशालिजातकादिभिरटवीकुटुम्बिनां गृहैरुपेतं वनन्ददर्श तत्रैव तं दिवसमत्यवाहयदिति।

इति श्रीहर्षचरिते दण्डयात्राकथनं नाम सप्तमोच्छ्वासः।

# अष्टमोच्छ्वासः ।

---

सहसा सम्पादयता मनोहरप्रार्थितानि वस्तूनि ।
दैवेनापि क्रियते भव्यानां पूर्वसेवैव ॥
विद्वज्जनसम्पर्को नचेष्टज्ञातिदर्शनाभ्युदयः ।
कस्य नखाय विपिने भवति महारत्नलाभश्च ॥

अथापरेद्युरुत्थाय पार्थिवस्तस्मात् ग्रामकान्निर्गत्य विवेश विन्ध्याटवीं अ.ट च तस्यामितस्ततः सुबहून्दिवसान् एकदा तु भूपतेर्भ्रमत एवाटवीकसामन्तस्य शरकेतोः सूनुर्व्याघ्रकेतुर्नामक्ततोऽपि कज्जलश्यामलं श्यामलतावलयेनाधिललाटमुच्चैः कृतमौलिबन्धमन्धकारिणोमकारणभुवं भ्रूकुटीभङ्गेन त्रिरेखेन त्रियामामिव साहससहचारिणीं ललाटस्थलीं सदा समुद्वहन्तं अवतंसितैकशुकपक्षप्रभाहरिताय मानेऽपि नष्टकाचमणिकेन श्रवणेन शोभमानं किञ्चित् चित्तस्य चक्षुषः प्रविरलपक्ष्मणः सहजेन रागरोचिषा साधनरसोपयुक्तं तार्क्ष्यमिव क्षतजमिव क्षान्त मवनाटनासिकञ्चिपीटाधरनाकिनश्चिबुकमभिन्नानुत्कटकपोलकूटास्थिपर्यन्तमीषदुदग्रग्रीवाबन्धमधस्कन्धस्कन्धार्द्धभागमनवरतकनककोदण्डकुण्डलीकरणकर्कशव्यायामविस्तारितेन मांसलेनोरसा हसन्तमिव तटशिलाप्रथिमानं विन्ध्यगिरेरजगरगरीयसा च भुजयुगलेन तुलयन्तमिव तुहिनशैलसालद्रुमाणां द्राघिमाणं वाराहबालवलितवलयबन्धना-

भिर्नागदमनजटिकाजुटिकाभिर्जटिलीकृतपृष्ठे प्रकोष्ठे प्रतिष्ठाङ्गतं गोदन्तमणिचित्रवपुषं वलयं बिभ्राणं तुन्दिलं तुण्डिभमभिरमणि चर्मनिर्मितपट्टिकयोच्चित्रचित्रकार्यकारितपरिवारया संकुलाजिनजालिकया शृङ्गमयमसृणितमुष्टिभागभासुरया पारदरसलेपलिप्तसमस्तस्वस्तिकया कृपाण्या करालितविशङ्कटकटीप्रदेशं प्रथमयौवनोल्लिख्यमानमध्यभागभ्रष्टमांसभरिताविव स्थवीयांसौ ऊरुदण्डौ दधतमच्छभल्लचर्ममयेन भल्लप्रायप्रसृतशरसदा शबलशार्दूलचर्मपट्टापीड़ितेनालिकुललम्बमानलोलपृष्ठभागभाजा भस्त्राभरणेन पल्लवितमिव कार्ष्ण्य मुपदर्शयन्त मुरश्छिभागोत्तसितचाषपिच्छचारुशेखरे खदिरजटानिर्माणे क्षुरप्राये प्रचुरमयूरभिया पत्रलताचित्रत्वचि त्वचि वारगुणे वामस्कन्धाध्यासिनि धनुषि प्रलम्बमानेनैव शिरसा शितशरकृत्तैकनलकविवरप्रवेशिना जङ्घाजनितस्वस्तिकबन्धेन बन्धूकलोहितरुधिरराजिरञ्जितप्राणवर्त्मना बभ्रुविततिव्यक्तविभाव्यमानकोमलक्रोड़शुक्लिम्ना शशघाताटनिशिखाग्रस्थितग्रीवेण प्रावृत्तचञ्चूत्तानताम्रतालुना तित्तिरिणा वर्णसृष्टिमिव मृगयां दर्शयन्तं विषमविषदूषितवदनेन विकर्णेन कृष्णाहिनेव मूलभृतेन व्यग्रदक्षिणकराग्रं जङ्गममिव गिरितटतमालपादपं यन्त्रोल्लसितमश्मसारस्तम्भमिव भ्रमन्तमञ्जनलोहस्तम्भच्छेदमिव गलितं विन्ध्याद्रेः प्राकारं कलिकालानां कालपाशं कुरङ्गमयूखानां धूमकेतुं मृगराजचक्राणां महानवमीमहं भीरुण्डलानां हृदयमिव हिंसायाः फलमिव पापस्य कारणमिव कालरात्र्याः शबरयुवानमादायाजगाम ।

दूरेच स्थापयित्वा विज्ञापयां बभूव देवास्य सर्व-विन्ध्यारण्यस्य स्वामी सर्वपल्लीपतीनां प्राग्रसरः प्रवरसेना पति र्भूकम्पोनाम तस्यायं स्वर्धया निर्घातनामा सकलस्यास्य विन्ध्यकान्तारस्य पर्णाना मप्यभिज्ञः किमुत प्रदेशानां एन पृच्छतु देवः योग्योऽयमाज्ञां कर्तुमिति कथिते च तेन निर्घातः क्षितितलविनिहितमौलिः प्रणाममकरोत्। उपनिन्येच तित्तिरिणां सहस्रं प्रणोपायनं अवनिपतिस्तु समानघनः स्वयमेव तमप्राक्षीत् अज्ञाभिज्ञा यूयमस्य सर्वस्योद्देशस्य निहारशीलाश्च दिवसेष्वेषु भवन्तः सेनापतेर्वान्यस्य वा त्वदुपजीविनः कस्यचित् उदाररूपे वनान्तिनगतापि वेददर्शनगोचरमिति निर्घातस्तु भूपालालापप्रसादेनात्मानं बहुमान्यमानः पुनरपि प्रणामादर्शितादरश्च विज्ञापयामास देव! प्रायेणास्य हरिणोऽपि नापरिगताः सञ्चरन्ति सेनापतिना कृतएवनार्यः नास्त्येवं रूपा काचिद्बला तथापि निदेशादिदानीमन्वेषणं प्रतिदिशं तवक्लत्यैः क्रियते यत्नः ततश्च गव्यूतिमात्रे सुनिर्माणते महति महीधरमालामूलरुहि महीरुहां षण्डे पिण्डपातिप्रभृतान्तेवासिपरिवृतपाराशरीदिवाकरमित्रनामा गिरिनघनमाश्रित्य प्रतिवसति स विन्देद्वार्तामिति तच्छ्रुत्वा नरपतिरचिन्तयत् श्रूयते हि ततो भवन सुगृहीतनाम्नः स्वर्गतस्य ग्रहवर्मणो बालमित्रं मैत्रायणी यस्त्रयीमपहाय ब्राह्मणायतनोविद्वानुत्पन्नसमाधिः सौगते मते युवैव काषायाणि गृहीतवानिति प्रेयांश्च जनस्य जनयति सुहृदपि दृष्टोहृशामाश्वासं अभिगमनीयाश्च गुणाः सर्वस्य कस्य न मनीज्ञोमुनिभावोभगवति! वैधेये! विधर्मग्राहिणी गरिमाणमुत्साहयतीत्यादि प्रकारश्चाब्रवीत् अङ्ग! समुद्दिश

तमुद्देशं यत्रास्ते सपिण्डपातीत्युक्त्वा तेनोपदिश्यमानवर्त्मा प्रववृते गन्तुम् ।

अथ क्रमेण गच्छत एवास्यानवकेशिनः कुड्मलितकर्णिकाराः स्थितफलेग्रह्यः फलभरनमिततरवो नीलदला नालिकेरनिकराः करिकेसररत्नपरिसराः कोरकनिकुरम्बरोमाञ्चितकुरवकराशयो रक्ताशोकपल्लवलावण्यलिप्यमानदिशः प्रविकसितकेसररजोविसरवर्द्धमानवासरधूसरिमानः खरजसःसिकतिलाः प्रतिगलितहिङ्गवः प्रसवधूलिपिङ्गलप्रियङ्गवः परागपिञ्जरमञ्जरीपुञ्जायमानमयूरपुञ्जशिञ्जाजनितजनमुदो मदमत्तमिलितमेचकितमुचुकुन्दकुन्दकाण्डकर्ण्यमाणा निःशङ्कारिकरटनटकण्डूतय आप्यायमानचटुलकशासारशावकशवशशाद्वलसुभगभ्रमयस्तमःकालतमतमालमालामिलितातपास्तवककन्दुरितदेवदारुतरवस्तरुणताम्बूलिस्तम्बजालकितजम्बूजम्बीरवीथयः कुसुमधूलिधालकदम्बचक्रचुम्बितव्योमानो बहलमधुमोचोच्चितचितयः परिमलघटितघ्राणतृप्तयः कतिपयदिवसप्रसूतकं कुटिकुटीकृतकूटजकोटराश्वटकमञ्चायमाणा वाटचाटकैः क्रियमाणचाटवः सहचरीसहचरचञ्चुचकोरचञ्चवो निर्भरभूरिभेरण्डभूयमानपाकदिलवः सदाफलकखङ्गफलबहुलाः फलविग्रसनिःशूकशुकशकुन्तशातितशलाटवः शेफालिकाशिफाविवरविस्त्राविवर्ज्यमानगैरिकराशयः शैलेयसुकुमारशिलातलसुखशयितशिशवो निरातङ्करङ्कवो निराकुलनकुलकेलयः कलकोकिलकुलकलकलकलितोद्दामाः सहकारामरोमन्थायमानचमरीयूथा यथासुखनिषण्णतकषण्डखगमण्डलाः निर्विकारहकविलोक्यमानमृगपोतपीतगवयधेनवः-

अवगाहारिसनीरगिरिनितम्बनिर्झरनिनादनिद्रानन्दायमान-करिकुलतालदुन्दुभयः समासन्नगीतकितकिन्नरगीतरवरसमा-सारङ्कवः प्रमुदिततरतरक्षवः नतहरितहरिद्राद्रवरज्यमान-वराहपोतपोतावलयो गुञ्जागुञ्जगुञ्जज्जाहकाश्मजातिजालक-सुप्तशारिजातजातयो दंशककुपितकपोतपेटकपाटितपालकी-टपुटकाः लिकुचलङ्घनलम्पटगोलाङ्गूललङ्घ्यमानलवलयो बद्धवा-लुकालवालवलयाः कुटिलकुल्याविवलितबालकितनदीकाः स्रोतसांनिबिडशाखाकाण्डलम्बमानकमण्डलवः सूत्रमाणिक्या-सक्तविकभिक्षाकपालपल्लवितलतामण्डपाः निकटकुटीकृतपाट-लमुद्राचैत्यमुकुलय चीवराम्बरकाषायोदकदूषितोद्देशा मेघमया इव कृतशिखण्डिकोलाहला वेदमया इवापरिमितशाखाभेदग-हना माणिक्यमया इव महानीलतनवस्तिमिरमया इव सकल-जननयनमुषो यामुनमहाह्रदा इवोर्ध्वीकृता मरकतमणिश्या-मलाः क्रीडापर्वता इव वसन्तस्याञ्जनाचला इव पल्लविता स्तनया इवाटवीजाता विन्ध्याद्रेः पातालान्धकारराशय इव भित्वा भुवमुत्थिताः प्रतिवेशका इव वर्षावासराणामङ्गावतारा इव कृष्णार्धरात्राणामिन्द्रनीलमयाः प्रासादा इव वनदेवतानां पुर-स्ताद्दर्शनपथमवतेरुस्तरवः ।

ततो नरपतिरभवन्मनसि अदूरवर्तिना खलु भवि-तव्यं भवतेति अवतीर्य च गिरिसरिति समुपस्पृश्य युग-पद्विश्रमसमयसमुत्कृष्टघोषबधिरीकृताटवीजगह्वने तस्मि-न्नेव प्रदेशे स्थापयित्वा वाजिसैन्यमवलम्ब्य तपस्विजनदर्शनेऽपि तं विनयं हृदयेन दक्षिणेन च हस्तेन माधवगुप्तांसे विरलै

रेव वाजिभिरनुगम्यमान श्चरणाभ्यामेव प्रावर्तत गन्तुं अथ तेषां तरूणां मध्ये नानादेशीयैः स्थानस्थानेषु स्थाणुनाश्रितैः शिलातलेषूपविष्टैर्लतावनान्यर्चयद्भिररण्यनिकुञ्जेषु निलीनैर्विटपसच्छायासु निषण्णैस्तरुमूलानि निषेवमाणै र्वीतरागैरार्हतैर्मस्करिभिः श्वेतपटैर्महापाशुपतैः पाण्डरीभिक्षुभिर्भागवतैर्वर्णिभिः केशलुञ्चनैर्लौकायतिकैः कापिलैः काणादैरौपनिषदैरीश्वरकारिभिर्धर्मशास्त्रिभिः पौराणिकैः साप्ततन्तवैः शाब्दैः पाञ्चरात्रिकैर्वैखानसैर्वानप्रस्थैरन्यैश्च स्वान् स्वान् सिद्धान्तान् शृण्वद्भिरभियुक्तैश्चिन्तयद्भिश्च प्रतिरचयद्भिश्च सुशयानैश्च निश्चिन्वद्भिर्व्युत्पादयद्भिर्विदमानैश्चाभ्यस्यद्भिश्च व्याचक्षाणैश्च शिष्यतां प्रतिपन्नैश्च दूरादेवावेद्यमानमतिनिशितैः कविभिरपि चैत्यकं कुर्वाणैस्त्रयीशरणपरैः परमोपासकैः शुकैरपि शाक्यशासनकुशलैः कोशमुपदिशद्भिश्च शिक्षापदोपदेशदोषोपशमशालिनीभिः शारीकाभिरपि धर्मदर्शनानि दर्शयन्तीभिश्चानवरतश्रवणगृहीतानि कौशिकैरपि बोधिसत्वजातकानि जल्पद्भिर्जातसौगतशीलशीतलस्वभावैर्द्वीपैरप्यमांसाशिभिरुपास्यमानमासनोपान्तविस्रब्धसुप्तानेककेसरिशावकतया मुनिपरमेश्वरमवनिमदृव सिंहासने निषण्णमुपशममिव पिबद्भिर्वनहरिणैर्जिह्वालताभिर्लिह्यमानपादपल्लवं वामकरतलनिविष्टेन नीवाराननता पारावतपोतेन कर्णोत्पलेनेव प्रियां मैत्रीं प्रसाधयन्तमितरकरकिसलयेन नखमयूखलेखाजनितजलव्यायाममोहसुदुग्रीवं मायूरं मरकतमणिकरकमिव वारिधाराभिः पूरयन्तमितस्ततः पिपीलिकाश्रेणीनां श्यामाकतितण्डुलकणान् स्वयमेव विकिरन्त मरुणतरवटेन प्रथीयसा सम्वीतं बहुल-

बालातपविच्छिन्नमिव पौरन्दरं दिग्विभागमुल्लिखितपद्मरागप्रभाप्रतिमया रक्तावदातदेहप्रभया पाटलीकृतानां काषायमिव दिशामवदिशन्तं मनोज्ञत्वादधोमुखेन मुदमुकुलितकुमुदाकाराकारणस्निग्धधवलप्रसन्नेन चक्षुषा जनक्षुत्तृष्णादूरदन्तयाणां जीवनार्थममृतमिव वर्षन्तं सर्वशास्त्रार्थपरमाणुभिरिव निर्मितं परमसौगतमप्यनवलोकितेश्वरमचलितं मनस्यस्खलितं तपसि लग्नं महसि आलोकमिव यथावस्थितसकलपदार्थप्रकाशकं दर्शनार्थिनां सुगतस्यापि सयमनमिव धर्मस्याप्याराधनीयमिव प्रसादस्यापि प्रसादनीयमिव वन्द्यत्वस्यापि वन्दनीयमात्मनोऽपि स्पृहणीयमिव ध्यानस्यापि ध्येयमिव विज्ञानस्यापि विज्ञेयमिव जन्म जपस्यापि धर्मस्य तत्त्वं तपःशरीरं शौचस्य कौशलस्य वेश्म विश्वासस्य सर्वस्वं सुवृत्ततायाः दासेरं दाक्षिण्यस्य परम्परानुकम्पायाः मध्यमे वयसि वर्तमानं दिवाकरमित्रमद्राक्षीत् ।

अथ प्रशान्तगम्भीराकारारोपितः सादरं दूरादेव सम शिरसा वचसा ववन्दे । दिवाकरमित्रस्तु मैत्रीमयः प्रकृत्या विशेषतस्तेनापरेणापूर्वेणा मानुषलोकोचितेन सर्वाभिभाविना महानुभावाभोगभाजा भ्राजिष्णुना भूपतिना प्रकृतेनाकारविशेषेण तेन चाभिजात्यप्रकाशकेन गरीयसा प्रश्रयेणाह्लादितचक्षुषि तेजसि च युगपदेव शान्तितधीरस्वभावोऽपि सम्पादितससम्भ्रमाभ्युत्थानः सङ्कल्प्य किञ्चिदुन्नमनवेगविलोललम्बमानांसार्पितचीवरपटान्तमुत्क्षिप्यानेकाभयदीक्षादक्षिणं महापुरुषलक्षणलेखया प्रशस्तहस्तं स्निग्धमधुरवाचा सगौरवमारोग्यदानेन राजानमन्वग्रहीत् । अभ्यनन्दच्च स्वागतगिरा गुरुमि-

वाभ्यागतं बहुमन्यमानस्तेनैवासनेनास्यात्रेति निमन्त्रयाञ्चकार पार्श्वस्थितं च शिष्यमब्रवीत् आयुष्मन्नुपानय कमण्डलुना पादोदकमिति राजा त्वचिन्तयत् अलोभः खलु संयमनपाशसौजन्यमभीतानां स्थाने खलु तत्रभवान् गुणानुरागी गृहवर्मा बहुशो वर्णितवानस्य गुणानिति प्रकाशञ्च बभाषे भगवन् । दन्तदर्शनपुण्यानुगृहीतस्य मम पुनरुक्तइवायमार्यप्रयुक्तः प्रणिपात्यनुग्रहश्चक्षुः प्रदानप्रसादस्वीकृतस्य उपरि कणानिवारुनादिदानोपचारादिव चेष्टितमतिभूमिरेव भवादृशां पुरः सम्भाषणास्नानाभिषेकप्रक्षालितसकलवपुषश्च मे प्रदेशदृष्टिपाद्यमप्यपार्थकम् आसतां भवन्तोयथासुखमासीनोऽहमित्यभिधाय क्षितावेवोपाविशत् ।

अलङ्कारो हि प्रभवतां परमार्थतः प्रश्रयातिशयोरत्नादिकन्तु शिलाभार इति आकलय्य पुनः पुनरभ्यर्थमानोऽपि यदा न प्रत्यपद्यत पार्थिवो वचनन्तदा स्वयमेवासनम्भेजे भजन्तं भूपतिमुखनलिननिहितनिहतनयनयुगलनिश्चलकृतहृदयश्च स्थित्वा काञ्चित्तु कालकलां कलिकल्मषकालुष्यमिवाक्षालयत् अमलाभिर्दन्तमयूखमालाभिर्मूलकमाभ्यवहारसम्भवसुद्गमन्निव परिमलसुभगं विकचकुसुमपटलपाण्डरम् लतावनमवादीत् । अद्यप्रभृति न केवलमयमभिनन्द्योवन्द्योऽपि खलु प्रकाशितसारः संसारः किन्नाम नालोक्यते जीवद्भिः अद्भुतरूपमनुचिन्तितोपनतपथमुपागतं एवंविधैरनुमीयन्ते जन्मान्तरावस्थासु कृतानि सुकृतानि हृदयोत्सवैरिहापि जन्मनि दत्तमेवास्माकममुना तपःक्लेशफलमसुलभदर्शनं दर्शयता देवानां प्रियमाष्टमेराधीत मद्यतं ईक्षणाभ्यां जातं निष्कलङ्कं मान-

सा निर्वृतिसुखस्य महद्भिः पुण्यैर्विना न विश्राम्यन्ति सज्जने त्वा-
दृशि सुदिवसः यस्मिन् जातोऽसि सा सुजाता जननी या सकल
लोकजीवितानन्दजननमजनयद् आयुष्मन्तं पुण्यवन्ति पुण्यानि
तानि एषामसि परिणामः सुकृततपसस्ते रूपनिर्माणपरमा-
णवः परिगृहीता येन त्वया तद्भाग्यं सौभाग्य माश्रितोऽसि येन
धन्यः स पुरुषभावो भवति व्यवस्थितोयत् मुमुक्षोरपि मे पुण्य-
भाजमालोक्य पुनःश्रद्धा जाता मज्जन्मनि नेच्छद्भिरप्यस्माभिर्दृष्टः
कुसुमायुधः कृतार्थमद्य चक्षुर्वनदेवतानां अद्य सफलं जन्म पा-
दपानां एषामसि गतो गोचरं अमृतमयस्य भवतो वचसां माधु-
र्यमवधार्यमेव अस्य त्वीदृशि शैशवेऽपि विनयस्योत्पादकं पदार्थं
ध्यायं ध्यायमपि न सम्भावयति भुवि सर्वथाशून्य आसीदजायत-
दीर्घायुषि गुणग्रामधन्यः स भूभृत् यस्य वंशे मुक्तामयःसम्भू-
तोऽसि एवम्विधस्य पुण्यवतः कथमपि प्राप्तस्य केन प्रियमाचराम
इति पारिप्लवचेतो नः सकलवनचरणार्थं साधारणस्य कन्दमूल-
फलस्य वा गिरिसरिदम्भसो वा केयं मम परोपकारिणी
कृतस्तु कायकलिरस्मरत्।

करसर्वस्व मवशिष्टातिथ्याय स्वायत्तास्त्र विद्याविन्दजः
कतिचिदुपयोगन्तु प्रीतिन्न विचारयन्ति स्वीक्रियतां यदत्रो-
पयोगार्हं यदि नोपयुङ्क्ते किञ्चिदर्थलवमरक्षणीयाक्षरं
वा कथनीयमिदमपि वा ततः श्रोतुमभिलषितहृदयसर्वस्व
मिदन्नः केन कृत्यन्न हारेण भव्येन भूषितवान् भमेना मनोऽग्रे-
सरेणानेन मधुरसविदुरमिव हृदयधृतिकरमनवरतं वर्षितव-
चसैव सर्वमनुष्ठितं धन्योऽस्मि यदेवमभ्यर्हितस्त्वमवानुपचारि-
णीयमपि मान्योमान्यते नामस्य च महावनपरिभ्रमणस्य च

कारणमवधारयतु मतिमान् मम हि विनष्टनिखिलेष्टबन्धो-जीवितानुबन्धस्य निबन्धनं कैव यवीयसी स्वसावशिष्टा सा च भर्तृवियोगाद्वैरिभवनात् भ्रमन्ती विन्ध्यवनमम्बुधरवज्रब-हुङ्कारितगजकुलकलितमपरिमितम्रगपतिशरभभयमुत्तमद्दिष-मुषितपथिकगमनमतिनिशितशरकुशपरुषं वटशतविषं अवि-शदयोगात् अतस्तामन्वेष्टुं वयं निशि निशि च सततं मटा-मो नचासादयाम: कथयतु गुरुरपि यदि कदाचित् कुतश्चि-द्वने चरत: श्रुतिपथमुपगता तत्प्रवृत्तिरिति ।

अथ तच्छ्रुत्वा जातोद्वेग इव पुनरप्यवादीत् धीमन्न खलु कश्चिदेवं भूतो वृत्तान्तोऽस्मानभ्युपागत: अभाजनं हि वयमीदृशानां प्रियाख्यानोपायनानां भवत इत्येवं भाषमाण एव तस्मिन्नकस्मादेवागत्यापर: शमिनि वयसि वर्तमान: सम्भ्रान्त इव पुरस्तादुपरचिताञ्जलि: जातकरुणाम्बु: प्रव-र्तिचक्षुषि भिक्षुरभाषत भगवन्! अतिकरुणं कर्म वर्तते बालैव बलवद्व्यसनाभिभूता अश्रुतपूर्वा कल्या-णरूपा अतिशोकावेगविवशा वैश्वानरं विशति सम्भावयतु तां मोषितप्राणां भगवानभ्युपपद्यताञ्च समुचितै: समाश्वासै रनुपरतमपूर्वकृमिकीटमपि दु:खितं दयालोरार्यस्य दृष्टिगो-चरं गतमिति राजा तु निजानुजाशङ्कसौदर्यस्नेहोदलवद्द्रुत इव दु:खेन दोधूयमानहृदय: कथमपि गद्गदिकागृहीतकण्ठो विकलवाक् वाष्पाधानदृष्टि: पप्रच्छ पराशरिन् कियद्दूरे सा योषिदेवं जातीया जीवेद्वा इति पृष्टा वा त्वया कासि कवससि किमर्थं वा वनमुपागतासि वा किन्निमित्तं मनलमिति इदमा दितश्च प्रभृति कात्स्न्येन कथ्यमानमिच्छाम: श्रोतुं कथयार्य:

गता दर्शनगोचरं आकारतस्य कीदृशीत्यभिहितस्य भूभुजा भिक्षुराचचक्षे।

महाभाग! श्रूयतां अहं प्रत्युषस्येव वन्दित्वा अनेनैव गिरिनदीरोधसा सैकतसुकुमारेण यदृच्छया विहरन्नातिदूरमेकस्मिन्वनलतागहने गिरिसमीपभाजि भ्रमरिणामिव हिमहतिकमलाकरकातराणां रसितं सायमाणानामतितारतानानुवर्तिनीनां वर्णतन्त्रीणामिव झङ्कारमेकतानन्नारीणां रुदितरवमधृतिकरमतिकरुणमाकर्णितवान्। उपजातकौतूहलस्य गतोऽस्मि त प्रदेश दृष्टवानस्मि च दृषत्खण्डखण्डिताङ्गुलिभिः लोहितेन पार्ष्णिप्रविष्टशरशलाकाशल्यशुकसङ्कोचितचक्षुषाध्वनीनश्रमस्लथनिश्चलचरणेन स्थानव्रणव्यथितगुल्फबद्धभूर्जत्वचा पातकरण्टकवेदखञ्जजङ्घाजातज्वरेण पपाट स्वदुपाण्डरपिण्डकेनाच्छकज्जलजर्जरितजानुना च शतावरीदारिपतोरूपा च विदारितारिदुकूलेनोत्कोटिभिः पादितकञ्चुकपटेन च फललोभावलम्बितवनदरीलताजालकैरुल्लिखितसुकुमारोदरेण च कुरङ्गश्टङ्गोत्खातैः कन्दमूलफलैः कदर्थितवाङ्गना च ताम्बूलविरहविरसमररवखण्डितकोमलामलकीफले च कुशकुसुमाहतिलोहितानां अयतामक्ष्णां लेपीकृतमनःशिलेन कष्टवकीव तालुनालककेशेन च केनचित्किसलयोपपादितातपत्रकृत्येन केनचित् कदलीदलव्यजनशान्तिना केनचित् कमलिनीदलपुटभ्रमिताम्भसा केनचित् पाथेयीकृतमृणालपूलिकेन केनचित् अंशुकदशाशीर्णनिहितनालिकेरकोशकलशीकलितसरलतैलेन कतिपयावशेषशोकविकलकलमूकाकुब्जवामनवधिरवर्बरविरलेनाबालानां चक्रनालेनाप्राप्ततामापत्कापि कुलीङ्गनि-

वामुच्यमानां लावण्येन प्रभालेपितप्रतिविम्बितैरासन्नलताकि-
सलयैर्दुःखव्रतैरिवान्तःपाटलीकृतायामपि निच्छायमुखमुद्व-
हन्तीमटवीशून्यतयातिशयानां स्वप्नमयीमिव निश्चेतनतया मरु-
न्मयीमिव श्वाससम्पदा पावकमयीमिव सन्तापं वहतानेन सलि-
लमयीमिवाश्रुप्रसरेण वियन्मयीमिव निरालम्बत्वेन तड़िन्मयी-
मिवापरि प्लवतया शब्दमयीमिव परिदेवितबाहुल्येन मुक्ता-
शुकरत्नकुसुमकनकपत्राभरणां कल्पलतामिव बाहुल्येन महा-
वने पतितां परमेश्वरोत्तमाङ्गपातदुर्ललितां गङ्गामिव वनकु-
सुमधूलिधूसरितपादपल्लवां प्रभातचन्द्रमूर्तिमिव लोकान्तरम-
भिलषन्तीं निजजलमोचकधवलायितनेत्रशोभां मन्दाकिनी-
मृणालिनीमिव म्लानां दुःसहरविकिरणसंस्पर्शखेदनिमीलितां
कुमुदिनीमिव दुःखेन दिवसं नयन्तीं दण्डदशापिसम्वादितां
प्रत्यूषदीपशिखामिव क्षामपाण्डुरवपुषं पार्श्ववर्त्तिवारणाभि-
योगरक्ष्यमाणां वनकरिणीमिव दुःखमहाह्रदे निमग्नां प्रविष्टां
वनगहने ध्याने च स्थितां तरुतले मरणे च पतितां धातुत्सङ्गे
महत्यनर्थे च दूरीकृतां भर्त्रा सुखेन च निर्वेदितां श्रमेणा-
युषा चाकुलां केशकलापेन मरणोपायेन च विवर्णीकृतामध्व-
धूलिभिरङ्गवेदनाभिश्च निर्दग्धां चण्डातपेन वैधव्येन च क्षतमुखीं
पाणिना मौनेन च गृहीतां प्रियसखीजनेन मन्युना च तथा भ्रष्टैः
बन्धुभिर्विलासैश्च विमुक्तेन श्रवणयुगलेनात्मना च परित्यक्तैर्भू-
षणैः सर्वारम्भैश्च भग्नैर्वलयैर्मनोरथैश्च चरणलग्नाभिर्दर्भाङ्कुर-
सूचिभिश्च हृदयनिहितेन चक्षुषा प्रियेण च दीर्घैश्च सितैरलकैः
क्षीणेन वपुषा पुण्येन च पादयोः पतन्तीभिश्च स्वल्पावशेषेण
परिजनेन जीवितेन चालसामुन्मेषे दृशामश्रुमोक्षे सन्ततां चि-

न्तासु विच्छिन्नामाशासु कृशां कायेन स्थूलां श्वसितेन पूरितां दुःखेन रिक्तां सत्वेनाध्यासितां मायासेन शून्यां हृदयेन निश्चलेन चलितां धैर्यादपि च वसतिं व्यसनानामाधारमाधीनामास्थानमवस्थानामायतनं धृतीनामावासमवसादानामापणमापदामभियोग्यायोग्यानामुद्योगमुद्वेगानां कारणं करुणायाः पदं परयत्नतायाः योषितं दृष्ट्वा चिन्तितवानस्मि चित्तमीदृशीमप्याकृतिमुपतापाः स्पृशन्ति सा तु समीपमुपगते मयि तदवस्थापि सबहुमानावनमितमौलिः प्रणमति अहन्तु तत्प्रबलकरुणाप्रेर्यमाणस्तामालपितुकामः कृतवान्मनसि कथमिव महानुभावामेनां मन्त्रये वत्सेत्यतिप्रणयः मातरिति चाटुः भगिनीत्यात्मसम्भावना देवीति परिजनालापः राजपुत्रीत्यस्फुटं उपासिकेति स्वकीयमनोरथः स्वामिनीति भृत्यभावाभ्युपगमः भद्रेति इतरस्त्रीसमुचितं आयुष्मतीत्यस्यामवस्थायामप्रियङ्कल्याणीति दशाविरुद्धं चन्द्रमुखीत्ययुक्तवचः बालेत्यगौरवोपेतं आर्येति जरारोपणं पुण्यवतीति फलविपरीतं भवतीति सर्वजनसाधारणम् ।

अपिच कासीत्यनभिजात किमर्थं रोदिषि दुःखकारणकारि मा रोदीरिति शोकहेतुमनपनीय न शोभते समाश्वसिहीति किमाश्रित्य समाश्वसयामि स्वागतमिति यातायातं सुखमास्वेति मिथ्या इत्येवं चिन्तयत्येव मयि तस्मात् स्त्रैणादुत्थायान्यतरा योषिदार्यारूपेव शोकविक्लवा मां समुपसृत्य कतिपयपलितशारितं शिरो नीत्वा महीतलमतुलसन्तापस्पृचकैरश्रुबिन्दुभिर्दहन्तीव मे चरणयुगलमतिकृपणैरक्षरैश्च हृदयमभिहितवती भगवन् ! सर्वसत्वानुकम्पिनी ह्ययं प्रव्रज्याप्रपन्न

दुःखतपश्चादीक्षादचास्य भवन्ति श्रमणाः करुणा कुलगृहञ्च भगवतः शाक्यमुनेः शासनं सकलजनोपकारसञ्जाच जैनी परलोकसाधनञ्च धनं धर्मो मुनीनां प्राणपरिरक्षणान्न नापरं पुण्यबहुजातं जगति गीयते जनेन अनुकम्पाभूमयश्च प्रकृत्यैव युवतयः किंपुनर्विपत्त्यभिभूताः साधुजनस्य सिद्धिदेत्वमार्यवचसां यत इयं नः स्वामिनी मरणेन च मातुः प्रवसनेन च पितुरभावेन च भर्तुः परलोकगमनेन च भ्रातुर्भ्रंशेन च शेषस्य बान्धववर्गस्यातिस्वदुहृदतया चानपत्यतया च निरवलम्बना परिभवेन च नीचारातिकृतेन च प्रकृत्या मनस्विनी अमुना महताऽटवीपर्यटनक्लेशेन कदर्थितसौकुमार्या दग्धदैवदत्तैरेवं बहुभिरपराधपरिव्यसनैर्विक्लवीकृतहृदया दारुणदुःखमपारयन्तीमनाक्रान्तपूर्वं स्वप्नमप्यविगणय्य गुरुजनमनुनयन्ती खण्डितप्रणयाम्नस्यमपि समवधूय सखीभिर्विज्ञाप्यं शरणमनाथमश्रुव्याकुलनयनमभूतपूर्वं मनसापि परिभूय भृत्यवर्गमग्निं प्रविशति परित्रायतामार्योऽपि तावदस्याः शोकापनयनोपायोपदेशनिपुणां व्यापारयतु वाणीमिति अस्याः कृपणां व्याहरन्तीमुत्याप्योद्विग्नतरः शनैः शनैरभिहितवान्।

आर्ये! यथा कथयसि तथास्मद्विरामगोचरोऽयमस्याः पुण्याशयायाः शक्ये चेन्मुहूर्तमात्रमपि त्रातुमुपरिष्टान्न हृयेत्यभ्यर्थना भविष्यति मम हि गुरुरपरुषो भगवान् सुगतः समीपत एव वसतिस्म स कथितएवास्मिन्नुदन्ते नियतमागमिष्यति परमदुःखान्धकारभिदुरैः सौगतैः स्वभावितैश्च स्वकीयैश्च दर्शितनिदर्शनैश्च नानागमगुरुभिर्गिरां कौशलैः कुशलशीलामेनां प्रबोधपदवीमवतारयिष्यतीति तच्छ्रुत्वा त्वरता-

मार्य इत्यभिदधाना सा पुनरपि मे पादयोः पतितवती सोऽहमागत्य त्वरमाणो व्यतिकरमश्रुतिकरमशरणक्षपणं युवतीमरणमत्र भवते गुरवे निवेदितवानिति ।

अथ भूभृद्भैवमेव मवधार्य तद्भाषित मश्रुरोऽपि स्वसुर्ज्जीविनिर्म्मीलितमनाः सर्वाकारसम्वादिन्या तथैव दूरीकृतसन्देहो दग्धः सोदर्यावस्थाश्रवणेन श्रवणयोराचार्यमवादीत् आचार्य! नियतं सैवेयमनार्यस्यास्य जनस्यातिकठिनहृदयस्यातिनृशंसस्य मन्दभाग्यस्य भगिनी अभागधेयैरेतामवस्थां नीता निष्कारणवैरिभिर्वैराकिविदार्यमाणं हृदयमेव निवेदयतीत्युक्त्वा तमपि-श्रमणमभ्ययात् आर्योत्तिष्ठ कथयतः सास्य प्रभूतप्राणपरित्राण-पुण्योपार्जने यामो यदि कथञ्चित् जीवन्तीं सम्भावयाम इति भाषमाण एवोत्तस्थौ ।

अथ समग्रशिष्यवर्गानुगतेनाचार्येण तुरङ्गेभ्यस्वावतीर्य समभिसन्नलोकेन पश्चादाकृष्यमाणप्राप्तिविधेनानुगम्यमानः पुरस्ताञ्च तेन शाक्यपुत्रीयेण प्रदर्श्यमानवर्त्मा पद्भ्यामेव तं प्रदेशं स्वविरलैः पदैः पिवन्निव प्रावर्त्तत क्रमेणैव समीपमुपगतः । शुश्राव लतावनान्तरितस्य सुमोघोर्मिहतस्त्रैणस्य तत्कालोचितानालापान् तथाहि भगवन्! धर्मधाव शीघ्र क्वासि कुलदेवते! देवि धरणि! धारयसि न दुःखितां दुहितरं तु खला प्रेषिता पुष्यभूतिकुलकुटुम्बिनी लक्ष्मी रथानां नाथमुखरवसुविविधाधुरां वधूं विधवां बोधयसि किमिति न मा भगवन्। भक्तजने सञ्चरिणि सुगत। सुप्तोऽसि राजधर्म पुष्यभूतिभवनपक्षपातिन् उदाहृतोऽसि कथं त्वय्यपि विपन्नान्ववा वन्ध्याः मात। मांकुटन्तीन्न शृणोषि मामापत्पतितां पतङ्ग! प्रसीद पाहि पतिव्रतामशरणा

अप्रयत्नरक्षितकृतघ्नचारित्रचण्डाल ! न रक्षसि राजपुत्रीं किमिव धृतलवणैर्महादेवी दुहितृस्नेहं छिन्धि यशोवति ! मुषितासि दग्धदैवदस्युना दुहितरि दह्यमानायां नापतसि प्रतापशीलशिथिलीभूतमपत्यं महाराजस्य राज्यवर्द्धन ! न धावसि मन्दीभूता भगिनीप्रीतिरहोनिष्ठुरः प्रेतभावः व्यपेहि पाप ! पावक ! स्त्रीघातक ! निर्घृण ! लज्जसे तातपादं दाहितवानसि सर्वाय दूतं देवीदाहं देवाय दुःखितजनार्तिहराय हर्षाय नितान्तनिःशूकशोकस्य पावक ! सकामोऽसि दुःखादायिन्नियोगराक्षस ! सन्तुष्टोऽसि विजने वने कमाक्रन्दामि कस्मै कथयामि कमुपयामि शरणं कां दिशं प्रतिपद्ये करोमि वा किं भागधेया !

अपि च गन्धारिके ! गृहीतोऽयं लतापाशः पिशाचमोचनिके ! मुञ्च शाखाग्रहणाकलशं कलहंसिके ! क्रमप्युत्तमाङ्गं मङ्गलिके ! किं मुक्तकण्ठमद्यापि रुद्यसे सिन्दूरिके ! दूरीभवति सखीसार्थः स्थास्यति कथमशिवे शवशिबिरे शबरिके ! सुतनुतानुपातिपतिद्याकाशि त्वमपि स्थाणालिके ! उपास्वातां मालतीं मातङ्गिके ! अङ्गीकृतस्त्वयापस्त्युवेल्लवल्लिके ! कथमनभिप्रेते वत्स्यसि प्रेतनगरे नागरिके ! गरिमाणमागतासि अनया स्वामिभक्त्या सुराजिके ! विराजितासि तेन राजपुत्रीविपदि जीवितव्ययव्यवसायेन भूपतिनाभ्युद्यमाभिर्न्ने भृङ्गारधारिणि ! धन्यासि कैरपि के कुतः पुनरीदृशी स्वप्नेऽपि न स्वामिनि ! मेनके ! जन्मनि देवीदास्यमेव यातु देवो देहं दहनः विजये विजयशयानु सानुमति ! नमति दौवारिकां दिवं गन्तुकामा दासि देहि दहनप्रदक्षिणावकाशं कुशलङ्के कुशानुपवङ्कि-

विकिर कुरङ्गिके ! कुरु कुरवककोरकोञ्चितां चितां चामरग्राहिणि। स्तद्दाणि पुनरपि कठिनं कण्ठे कर्षयितव्यानि निर्मदनमर्मनिर्मितानि निर्मर्यादहसितानि भट्टि। भद्रमस्तु परलोकगमनं ग्रामेधि ! गुणानुरागिणि ! गच्छ सुगति वासन्तिके ! अन्तरं प्रयच्छाप्टच्छ ते वस्त्रधारिणि ! देहि दृष्टिमिष्टां तव त्यजति जीवितं विजयसेना मुक्तकण्ठमारटति निकटे ते नाकस्त्रधारिणि। पादयोः पतति ताम्बूलकरङ्कवाहिका बहुशः बहुमता राजपुत्रा प्रतिलेखालिङ्गसेने ! मुञ्जलिके ! मार्जयसि कतिक्रत्वः सुदुःसहदुःखसहस्राख्दग्धचक्षुरिदं रोदिषि कियद्दाक्षिण्यं निर्माणमीदृशं प्रायशो यशोधने ! धारयस्यद्यापि किं मां माधविके ! किमियमवस्थास्तापनानाङ्गतः स कालः कालीन्दि ! सखीजनानुयाताञ्जलिना मुक्तिके ! मत्तपालिके ! लताः पृष्ठतः प्रणयिनीप्रणिपातानुरोधाः शिथिलय चकोरवति ! चरणग्रहणं कमलिनि। किमनेनोपालम्भेन प्राप्तं सुचिरं सखीसङ्गमसुखं आर्ये ! मत्तरिके ! तरङ्गसेने ! ते नमस्कारः सखि ! दामिनि ! दृष्टासि समुपनय हव्यवाहनार्चनकुसुमानि कुसुमिके ! देहि चितारोहणाय रोहिणिके ! हस्तावलम्बनं अम्ब। धात्रि ! भव भवन्त्येवंविधा एव कर्मविपाकाः पापकारिणीनां आर्यपादरजसामयमञ्जलिः परलोकप्रयाणे प्रणामोऽयं मातुर्मरणसमये कस्माल्लालसितेह लोके महीयानानन्दमयो हृदयस्य मे निष्यन्दी उज्वरोमाञ्चकञ्चुकमङ्गीकृत्याङ्गानि वामनिके। वामेन स्फुरितमक्ष्णा त्वया रससि वायस ! प्रत्युत्थे चीरनिवहे क्षणे चीणपुण्याः पुरोद्धृषितं तव हयानामुत्तरतः कस्येदमातपत्रमुच्चपा-

रूपान्तरेण विभाव्यते प्रभावति ! कुरङ्गकेन सुगृहीतनामा-नेनातपत्रेणाच्छतमयमार्य्यस्य देवि ! दिष्ट्या वर्द्धसे देवस्य हर्षस्यागमनमहोत्सवेनेति तच्च सत्वरमुपससर्प ददर्श च मुञ्चन्ती मग्निप्रवेशायोद्यतां राज्यश्रियं अवललम्बेच मूर्च्छानि-मीलितलोचनाया ललाटं हस्तेन तस्याः ससम्भ्रमम् ।

अथ तेन भ्रातुः प्रेयसः प्रकोष्ठबन्धानामोषधीनां रस-विसारमिव प्रत्युज्जीवनक्षमं क्षरता वमतेव परिहार्य्यमणीना-मचिन्त्यप्रभावमत्र तमिव नखचन्द्ररश्मिभिरुद्गिरता बन्धनेनेव चन्द्रोदयच्युतशिशिरशीकरश्चन्द्रकान्तचूडामणिं मूर्द्ध्नि मृणा-लमयाङ्गुलिनेवातिशीतलेन निर्वापयता दह्यमानं हृदयं प्रत्या-नयतेव कुतोऽपि जीवितमाह्लादकेन हस्तस्पर्शेन सहसैव चक्षु-रुन्मील्य राज्यश्रियं धाताचासम्भाविताङ्गमस्याचिन्तिता पतित-दर्शनस्य सहसा प्राप्तस्य भ्रातुः स्वप्नदृष्टस्येव कण्ठे समा-श्लिष्य तत्कालाविर्भावनिर्भरेणाभिभूता सर्वात्मना दुःखसम्भा-रेण नदीमुखप्रणालाभ्यामिव मुक्ताभ्यां स्थूलप्रवाहमुत्सृजन्ती बाष्पवारिविलोचनाभ्यां हा तात ! हा अम्ब ! हा सख्य ! इति व्याहरन्ती मुहुर्मुहुरुच्चैस्तरां रुसुदूभूतभगिनीस्नेहसङ्गा-वभारभावितमन्युना मुक्तकण्ठमतिचिरं विक्रुश्य वत्सेव त्विदा-नीमिति भ्राता करस्थगितमुखि ! समाश्वास्यमानापकल्याणि कुरु वचनमग्रजस्य गुरोरित्याचार्य्येण याच्यमानापि देवि ! न पश्यसि देवस्यावस्थां अलं रुदितेनेति राजलोकेनाभ्यर्थ्यमा-नापि स्वामिनं भ्रातरमवेक्षस्वेति परिजनेन विज्ञाप्यमानापि दुहितः विश्रम्यपुनटाररटिष्यसिइति निवार्य्यमाणापि बान्धव-वृद्धाभिः प्रियसखि ! यद्रोदिषि तूष्णीमास्व दृढं दूयते देव

इति सखीभिरनुनीयमानापि चिरन्भाविताने कदुःसहदुःख-निर्भरबाष्पोत्पीड्यमानकण्ठभारा प्रभूतमन्युभारभरितान्तःकर-णाकारुण्यजनकेन स्वरेण कालमतिदीर्घं रुरोद। विगते च मन्युवेगे वह्निसमीपादपकृष्य भ्राता वितानिकातरुतले निष-साद शनैराचार्य्यस्तु तन्तदा हर्षं इति विज्ञाय विवर्द्धिता-दरः सुतरां मुहूर्त्तमिवातिवाह्य निभृतसंज्ञापितेन शिष्ये-णापनीतन्नलिनीदलैः स्वयमानम्रो मुखप्रक्षालनार्थमुदकमुप-निन्ये।

अथ नरेन्द्रोऽपि सादरं गृहीत्वानवरतरोदनाताम्रं चिरप्रवृत्ताम्बुजलजालं रक्तपङ्कजमिव प्रथमं स्वसुश्चक्षुर-क्षालयत्। पश्चादात्मनः प्रक्षालितमुखशशिनि महीपाले सर्व्वो निःशब्दः सम्बभूव लिखित इव सकलो लोकः। ततो नरेन्द्रो मन्दं मन्दमब्रवीत् स्वसारं वन्दस्व भदन्तमाचार्य्यं! एष ते भर्त्तृ-द्वितीयं हृदयमस्माकं च गुरुरिति वचनात्तु राजदुहितरि-परिणमति परिचये श्रवणोपान्ते पुनरानीतनेत्राम्भसि नमन्त्या-माचार्य्यः प्रयत्नरचिताागतबाष्पाम्भःसम्भुज्यमानकण्ठयमनि-भचाटुलोचनं किञ्चित्पराङ्वृत्तवदनोदीर्घन्निश्वस्य स्थित्वा च क्षणमेकं प्रदर्शितप्रश्रयं मृदुपटुमधुरया वाचा व्याजहार क-ल्याणनाश इति बालं चिरकालं न किल चिरमास्ते लोकः क्रियतामवश्यकरणीयस्नानविधिः स्नात्वा गम्यतां भूयसैव भूयो-भूमिरिति।

अथ भूपतिरनुरुध्यमानो लौकिकमाचारमाचार्य्यवचनं चोत्थाय स्नात्वा गिरिसरिति सह स्वस्रा तामेव भूमिमया-

सीत्। तत्र तां सपरिजनां प्रथममाहितावधानः प्रावर्त्तत परवतीं भुजा पतितमिण्डप्रदर्शितप्रयत्नप्रतिपन्नाभ्यवहरणम-भोजयत्।

अनन्तरं च स्वयमाहारस्थितिमकरोत् भुक्तवांश्च बन्धनात् प्रभृति विस्तरतः स्वसुः कान्यकुब्जात् गौड़भूमिगमनं गौड़भूमे-र्गुप्तगमनं गुप्तितो गुप्तनाम्ना कुलपुत्त्रेण निष्क्रासनन्निर्गतायाश्च राज्यवर्द्धनमरणश्रवणं श्रुत्वा चाहारनिराकरणमनाहारायाश्च विन्ध्याटवीपर्य्यटनखेदं जातनिर्वेदायाश्च पावकप्रवेशोपक्रमं यावत् सर्वमशृणोत् परिजनतः। ततः सुखासीनमेकत्र तरुतले विविक्तभुवि भगिनीद्वितीयं दूरस्थितानुजीविजनं राजान-माचार्य्यः समुपसृत्य शनैरुपासाञ्चक्रे स्थित्वा च किञ्चित्काल-लेशतोवक्तुमुपचक्रमे श्रीमन्नाकर्ण्यतामाख्येयन्नः किञ्चिदस्ति।

अयं हि यौवनोन्मादात् परिभूयसी भार्य्या यौवनाव-तारतरलितास्तारास्ताकखेन तारकाराजो रजनीकर्णपूर-पुरुहूतपुरोधसोधिषणस्य धर्मपत्नीं पत्नीयन्नतितरां तारा-न्नामापजहार नाकतश्च पलायाञ्चक्रे चकोरलोचनया च तया सर्वाकाराभिरामया रमणीयेषु रममाणः प्रदेशेषु च नातिचिरान्न कथञ्चित्सर्वगीर्वाणवचनगौरवात् गिरां पत्युः पुनरपि प्रत्यर्पयामास।

ता हृदयेनात्यदन्नत विरहे वरारोहाया तस्याः सततं एक-दातु शैल दुःखमानो विमले वारिणीशवरुणालयस्य सङ्-क्रान्तमालम्ब तिबिम्बमीक्षितवान्। दृष्टवांश्च तत्तदा सस्मार स्मरस्मेरगत स्य तारामुखस्य मुमोच च मन्मथोन्माय-

मथ्यमानमानसः स्नस्य स्थवीयसः पीतकलकुमुदवनप्रभाप्रवा-हधवलतराभ्यामिव लोचनाभ्यां बाष्पवारिविन्दूनिव पतत एव तानुदन्वति समस्तानाचेमु मुक्ताशुक्तयः तासां चतुरिकोशेषु मुक्ताफलीभूतानवाप तान् कथमपि रसातलवासी वासुकिर्नाम विषमस्यामधीशः ।

स च तै मुक्ताफलैः पातालतलेऽपि तारागणमिव दर्शयद्भिरेकावलीमकल्पयत् चकार मन्दाकिनीति नाम तस्याः सा च सोमस्य सर्वासामोषधीनामपि पतेः प्रभावादनन्तविषस्वीकारादमृतसम्भवाच्च स्पर्शेन सर्वसत्वानां सन्तापापहारिणी बभूव। यतस्तां सर्वदा विषोष्मशान्त्यै वासुकिः पर्य्यधत्त समतिक्रामति च कियत्यपि काले कदाचित्तामेवैकावलीं तस्मान्नागात् नागार्जुनोनाम भागैरेव नीतः पातालतलं भिक्षुरभिक्षुतले निर्गत्य रसातलाच्च समुद्राधिपतये सातवाहननाम्ने नरेन्द्राय सुहृदे ददौ। सा चास्माकं कालेन कथमपि शिष्यपरम्पराया हस्तमागता यद्यपि भव इति भवति भवादृशां दातुं उपचारस्तथाप्यौषधबुद्ध्या बुद्धिमता सर्वसत्वराशिरक्षाप्रवृत्तेन रक्षणीयः शरीरेणायुष्मता विषरक्षणाय गृह्यतामयमित्यभिधाय भिक्षो रसग्रयवर्त्तिनश्चीवरपटान्तरसञ्चयां मुमोच तामेकावलीमुन्मुच्यमान एव यस्याः प्रभालेपिनि लब्धावकाशे विशदमहसि महीयसि विसर्पति रश्मिमण्डले युगपदवलायमानेषु दिङ्मुखेषु उज्ज्वलितलतावधूल्कण्ठितैरामूलाद्विकसितमिव वनतरुभिरभिनवमृणाललुब्धैर्धावितमिव बद्धपक्षपुटपटलधवलितगगनं वासरसिंहसयूथैः स्फुटितमिव भरवश-

विशीर्यमाणधूलिधवलैर्गर्भनिर्भेदसूचितसूचिसञ्चयसूचिभिः केतकीपीठैः उद्दलितदलदन्तुराभिः प्रबुद्धमिव कुमुदिनीभिर्विधूतसटाभारितदिक्चक्रैश्च वीतमिव केसरिकुलैः प्रहसितमिव दशनांशुमाल्यालोकविलिप्यमानवनं वनदेवताभिः विकसितमिव शिथिलितकुसुमकेसराट्टहासनिरङ्कुशङ्काशकाननैर्भ्रान्तमिव ससम्भ्रमभ्रमितबालपल्लवपरिवेषश्वेतायमानैश्चमरीकदम्बकैः प्रस्रुतमिव स्फायमानफेनिलतरतरङ्गोद्गारिणा गिरिनदीपूरेण परता रागेण लाभलोभादुदितमिव विकचमरीचिचक्राक्रान्तककुभा पूर्णचन्द्रेण प्रज्वालित इव दावानलधूमधूसरितदिगन्तरो दिवसः पुनरिव धौतानि वाष्पपातक्लिष्टानि नारीणां मुखानि ।

राजा तु मांसलैस्तस्या मयूखैराकुलीक्रियमाणो मुहुर्मुहुरुन्मीलयन्निमीलयंश्च चक्षुः कथमपि प्रयत्नाद्ददर्श तां सर्वाशापूरणीं पङ्क्तीकृतामिव दिङ्नागकरशीकरसंहतिघनमुक्तां शारदीमिव रेखीकृतां ज्योत्स्नां प्रकटपदकचिह्नां सञ्चारवीथीमिव बालेन्दो निश्चलीभूतं सप्तर्षिमालामिव हस्तमुक्तां अभिभूतसकलभुवनभूषणभूतिप्रभामिवेशानीं शशिकलाधवलगुणपरिगृहीतां कीर्तिमिव निर्गतां क्षीरांशेरनेकमहामहीभृत्परम्परागतां गङ्गामिव दुर्गतिहरां अनवरतस्फुटितधवलांशुकां पुरःसरपताकामिवागत्य परमेश्वरपदा घनसारशुभ्रान्दन्तपङ्क्तिमिवाभिमुखस्यैश्वर्यस्य वरमनोरथपूरणसमर्थां स्वयमस्रजमिव भुवनश्रियां निजकरपल्लवामिव वरणादुर्लक्षानुरागविहसितिकामिव

वसुधाया मन्त्रयोगसाधनप्रवृत्तस्याक्षमालामिव राजधर्मस्य समुद्रालङ्कारभूतां सख्यालेख्यपट्टिकामिव कुबेरकोशस्यापश्यत्तां विस्मयमाजगाम मनसा सुचिरं आचार्यस्तु तामुद्धृत्य बबन्ध बन्धुरस्कन्धभागे भूपतेः।

अथ नरपतिः प्रीतिमुपदर्शयन् आचार्याय रत्नानामेवं विधाना मनर्हा एव प्रायशः पुरुषाः तपःसिद्धिरियमाचार्यस्य देवताप्रसादो वा के वयमात्मनोऽपि किमु ग्रहणस्य प्रसादस्याख्यानस्य नादर्शनात् प्रभृति प्रभूतगुणगणगृहीतेन हृदयेन सङ्कल्पितमिदमामरणा माचार्येण उपयोगाय शरीरं अत्र कामचारीव कर्त्तव्यानामिति समतिक्रान्ते च कियत्यपि काले गते चैकावलीअर्पणानामालापे लोकस्यास्यान्तरं लब्ध्वा विस्रब्धे भ्रातरि राज्यश्रीस्ताम्बूलवाहिनीं पत्रलता माहूय उपांशुकर्णमूले शनैरादिदेश। दर्शितविनया पत्रलता पार्थिवं व्यज्ञापयत् देव! देवी विज्ञापयति न स्मरत्यार्यस्य पुरः कदाचिदपि कुतोविज्ञापना इदं हि शुद्धामसत्यतां व्याहारयतः हतदत्तदशाशिथिलविनयमबलानां हि प्रायशः पतिरवनीं वाचालमज्ञजभयविकलानां तु दुःखानलेन्धनायमानं प्राणिति शालीनत्वमेव केवलमार्यागमनेन क्षतोऽपि प्रतिहतो मरणप्रयत्नः यतः कापायग्रहणाभ्यनुज्ञयानुगृह्यतामपुण्यभाजनं जन इति जगाधिपतिस्तु तदाकर्ण्य तुष्णीमेवातिष्ठत्।

अथाचार्यः सधीरमभ्यधात् आयुष्मति! शोकोऽपि नाम विपर्ययः पिशाचस्य रूपान्तर माक्षेपस्य तारुण्यन्तमसः विषयस्यात्मकं प्रेतनगरनायकोऽयमनिवृत्तया दु-

नोऽय मक्षयोराजयक्ष्माय मलक्ष्मीनिवासो जनार्दनोऽय मपु-
ण्यप्रवृत्तः क्षपणोऽयमप्रतिबोधोनिद्राप्रकारोऽयमनलसधर्मा-
सन्निपातोऽय मशिवसहचरोऽविनायकोऽयमबुधसेवितो ग्रह-
मार्गोऽधर्मयोगसम्बन्धो ज्योतिष्प्रकारोऽयं स्नेहाद्वायुः कोपोमा-
नसादग्निः समभवत् भवादद्य क्षोभीरसा तिशोषो रागात् का-
लपरिणामादन्तस्याज्ञस्यस्याविणो हृदयमहाव्रणवङ्कल-
मोहान्धकारलब्धप्रवेशसरस्य प्राणतस्करस्य शून्यताहेतो-
र्महाभूतग्रामाघातकस्य सकलविग्रहक्षपणदक्षस्य दोषचक्रव
र्त्तिनः कासश्वासप्रजापोपद्रववङ्कलस्य देहदीर्घरोगस्यासदृष्टहस
मुत्थितस्य सकललोकत्रयकधूमकोर्जितातापहरणवैरनश्ववि-
श्रापितस्य स्फुरदनवद्यविद्योतमाननिग्रहग्रन्थिगहनगूढगर्भगहन
गम्भीराणि भूरिकाव्यकथाकठोराणि वज्रशास्त्रोद्दहनदृहन्ति-
द्विषामपि हृदयानि नालं सोढुमायातं किमुत च नवमालिका-
कुसुमकोमलानां सरसनिबिड़तन्तुदुर्बलानामबलानां हृदयमेवं
सत्यपि सत्यबरे! वद किमत्र क्रियते क उपालभ्यते कस्य पुरस्ता-
दुच्चैराक्रन्द्यो हृदयदाहिदुःखं वाख्याप्यते सर्वमक्षिणीनिमील्य
सोढव्यमेव मूढेन मर्त्यधर्मणा पुण्यवत्यः पुरातन्यः प्रवृत्तयः एताः
केन शक्यन्तेऽन्यथा कर्तुं संसरन्त मन्तन्दिवं द्राघीयसोजन्मजरा-
मरणघटीयन्त्रराजिरञ्जितं सर्वपञ्चजनानां पञ्चमहाभूतप्रपञ्चा-
कुलदूषितान्तःकरणव्यवहारदर्शननिपुणाः सर्वङ्कषा विषमा
धर्मराजधर्मस्थितयः क्षणमस्य क्षममाणा गलन्त्यायुष्काला-
कलनकुशलाः निलये कालनाडिका जगति सर्वजन्तुजीवोप-
हारपातिनि स्थिरति चण्डिकेवाटन्ती अनवरतमाणप्रया-

णाञ्चकटनपटवः प्रेतपतिपटहाः प्रतिदिशं पर्यटन्ति पेटकैः प्रतिपुरं प्रतप्तलोहलोहिताक्षाः कालकूटकान्तिकायाः कालपाशपाणयः कालपुरुषाः भीषणकिङ्करघटीपुटपट्टटङ्कारभयङ्कराः सर्वसत्वसम्भ्रमणा घोराघातघोषणा दिशिदिशि वहन्ति बहुविधचिताधूलिधूसरितः प्रेतपताकापट्टपटपतितग्टध्रहृष्टयः कष्टशोकाकुलकुटुम्बिनि विकीर्णकेशकलापशबलशिशिकासहस्रसंकुलाः किलिकिलायमानश्मशानशिबिरशिवाशबकापरलोकसार्थकसार्थप्रस्थानरथ्यावीथयः सकललोककवलावलेपनलम्पटा बहुला चिताङ्गारकालिकालरात्रिजिह्वाजीविनातिजीवतां तृप्ति मशिक्षिता च भगवतः सर्वभूतभुजो बुभुक्षुत्वयोरतिदूरवाहिनीचानित्यता तदीचणिकाकाचमहाभूतग्रामगोष्ठीगात्रेषु भङ्गुराणि गात्रयन्त्रपञ्जरदारूणि देहिनामशुभभोगावेशविवशा विशरारवः शरीरनिर्माणपरमाणवश्छिद्दुरा जीवनिबन्धनपाशतन्त्रीतन्तवः सर्वात्मना विश्वविनश्वरमेव मवधृत्य नात्यर्थं मर्हसि मेधाविनि! स्मृतिमतिमनसि तमसः प्रसरं दातुं एकोऽपि हि प्रतिसंख्यानक्षणोदारी भवति धृतेः।

अपिच दूरगलितेऽपि च शोके नन्विदानी मेवेक्षणीय एवायं ज्येष्ठः पितृकल्पोभ्राता भवत्या गुरुरितरया को न बहुमन्येत कल्याणरूपमीदृशं सङ्कल्पं भगवत्याः काषायग्रहणकृतमखिलमुज्ज्वलप्रशमनकारणं भगवतीप्रवज्यायाः खल्विदमालपतां महाभागस्तु भिनत्ति मनोरथमधुना यदयमत्र दिशति यदि भ्रातेति यदि ज्येष्ठ इति यदि वत्सल इति सर्वथा स्थातव्यमस्य नियोगे इत्युक्त्वा व्यरंसीत्।

उपरतवचसि तस्मिन् जगाद नरपतिः आर्यमप-हाय कोऽन्य एव मभिदध्यात् अभ्यर्थितदैवनिर्मिता विष-मपदावलम्बनस्तम्भा भवन्ति लोकस्य स्नेहदीप्रमत्त्र्योमोहान्ध-कारध्वंसनप्रदीपाः किं तु प्रणयप्रदानदुर्ललिता दुर्लभ-मपि मनोरथमतिप्रीतिरभिलषति अतिप्रतिगृहीताः प्रथम-मेव गुणास्तावता कायकलिमुचा जनेन उपयोगस्तु निरुप-योगस्यास्य लघूनि गुरूणि वा ।

अथ तथा तस्याभिनन्दितप्रणये पार्थिवस्तामुषित्वा विभा-वरीमुषसि वस्त्रालङ्कारादिप्रदानपरितोषितं विससर्ज निर्घात-माचार्येण सह स्वसारमादाय प्रयाणकैः कतिपयैरेकतट-मनुजाह्नवि निविष्टं प्रत्युज्जगाम । तत्र राज्यश्रीव्यतिकर-कथाः कथयतएव प्रणयिभ्यो रविरवततार गगनतलात् बहलमधुपङ्कपिङ्गलपङ्कमाकुरुवमञ्जुकोच चक्रवाकवल्लभो वा-सरः विप्रकीर्णरुधिरधारारुणवर्णानि लोकालोकानि यज्ञ-षीव याज्ञवल्क्यवक्रान्तानि निजवपुषि पाटलत्विषि पाप मुषि पूषा पुनरपि सञ्जहार जालकानि रोचिषां क्रमेण च स मुमोच पद्मरागरोचिष्णु रुणांशु रुणीयबन्धबद्ध पश्चिमा-चलस्य सहजचूडामणिरिव हकोदरकरपुटोत्पाटितप्रत्य-ग्रशोणितशोणाङ्गरागरौद्रो द्रौणायनस्य रुद्रभिन्नादानद-न्तकरमथनमुक्तमुण्डशिरानालनाडिरुधिरपूरितरणककपिलः कपालकर्परइव पैतामहः पितृवधकुपितरामरागरचितपृथ्वी-कण्टककार्तवीर्यः सकूटकुट्टाककुठारमुण्डनतुष्टदुष्टक्षत्रकण्ठ-कुहरकुल्याप्रणालीसहस्रपूरितो हृदयइव च दूरारोहिधीरैः धीरो भयनिगूढकरचरणमुण्डमालाकृतिः गुरुसमरखरनखर

प्रहारजरसत्वरकृत्रापि चणच्चिप्तक्षतजोक्षिता विहारसुरकमठ इव विलोक्यमानो नभस्यरुणगर्भो मांसपिण्ड इव खण्डितमानमानीय कालातिपातदूयमानदाक्षायणीक्षिप्तस्तटे मेरोरसुरवधाभिचापरूपपिशुनः शोणितक्वाथकषायित कुचिरतिविशङ्कटकाटाहइव बार्हस्पत्यसद्योगलितदानवदेहालोभितोपलेपभीषणो मुखमण्डलाभोग इव महाभैरवस्य मुहूर्तमदृश्यत

वेदान्तावलम्बितनिगृहीताद्रमांसभारेव बभासे वासरावसानवेलावेतसी विततबालसन्ध्यारागरज्यमानवरोरुसम्पुटविष्टमधुकैटभरुधिरपटलपाटलवर्णासमवलिते च सन्ध्यासमये चक्रवाक इव निजकुलकण्टककृतयुगकरणोद्यताया दिवः श्रिया इव गन्धर्वीभिर्विजिगीषया चलितायाः श्वेतद्वीपदूतइव चायत्या श्वेतभानुरूपानीयत निशायां नरेन्द्रा इति ।

इति श्रीहर्षचरिते अष्टमोच्छ्वासः ।

श्रीहर्षचरितं सम्पूर्णमस्तु ।

